THE

# ISAVASYA UPANISHAD

**WITH SRI SANKARA'S COMMENTARY**





ADHYATMA PRAKASHA KARYALAYA
HOLENARSIPUR

# मूलाविद्यानिरासः अथवा श्रीशङ्करहृदयम्

प्रणेता— य. सुब्रह्मण्यशर्मा

## विदुषामभिप्रायाः

१. "शतद्वयं वर्षाणां ईदृग्विचारपूर्णो वेदान्तप्रकरणनिबन्धः म भारतीग्रन्थरत्नकोशागारं नोज्ज्वलं चकारेति मन्ये । लिपिरपि भवतां प्रस गभीरा च · विचारचातुरी च भगवत्पादानां भाष्यकृतां लिपेः स्मारय

—महामहोपाध्यायानां नानादर्शनपरमाचार्याणां तर्क **पञ्चाननदेवशर्मणां**, वाराणसीत

२. "अवस्थात्रितयनिरूपणप्रक्रियाया वेदान्तार्थनिर्धारणे प्राध प्रदर्श्य सर्वाविद्याकलङ्करहितं निष्प्रपञ्चं यदद्वितीयात्मतत्त्वं तत्पूर्णानुभ वेद्यमित्यागमानुरोधिभिर्विविधैर्युक्तिभिर्निर्विचिकित्समवधारितमस्मिन् तया प्रकाशिते ग्रन्थे" —ब्रह्मश्री **विट्ठलशास्त्रिणां** वेदान्तशिरोमण वेदान्तविशारदविद्यावाचस्पतीत्यादिबिरुदांकितानां, बेंगळूरुनगरीत

३. "पाश्चात्यपौरस्त्येत्युभयविधतत्त्वशास्त्रेऽपि कृतपरिश्रम भवतां भगवत्पादाचार्याभिमततत्त्वप्रसारार्थं ये गीर्वाणवाण्या ग्रन्थनिम प्रयत्नास्ते अतीव श्लाघ्याः ॥"

— विदुषां **नागेशशास्त्रिणां**, धारवाडस्थसंस्कृतपाठशाल

४. "निष्पक्षपाततया पूर्वपक्षोपन्यासः नवनवोन्मेषशालिनी प्रदर्शनपरिपाटी स्वपक्षोपपादने प्रौढिश्च श्लाघ्यतमा विराजते ॥"

—ब्रह्मश्री **वेङ्कटेशशास्त्रिणां**, वेदान्तशिरोमणीनां, कोलारनगर

अध्यात्मप्रकाशकार्यालयः, बेंगळूरु सिटी

# THE ÎŚĀVĀSYA UPANIŚHAD

WITH

ŚRÎ ŚANKARA'S COMMENTARY

Edited by

Y. SUBRAHMANYA ŚARMA

AUTHOR OF 'MULAVIDYANIRASA'



# ईशावास्योपनिषत्

## श्रीशाङ्करभाष्यसंयुता

य. सुब्रह्मण्यशर्मणा

संशोधिता भाष्यटिप्पणेन समलंकृता च

—— * - - -

बेंगळूरुनगरे

अध्यात्मप्रकाशकार्यालये

आकाश्यं नीता

शकाब्दाः १८५३

# ग्रन्थविभागानुक्रमः





# संकेताक्षराणां विवरणम्

| | |
|---|---|
| अ. | अष्टेकरकंपेनीप्रकाशितपुस्तके पाठान्तरम् |
| आ. | आनन्दाश्रमप्रकाशितपुस्तके पाठान्तरम् |
| उ.सा. प. | उपदेशसाहस्री पद्यबन्धः |
| क. | कठोपनिषत् |
| गी. | भगवद्गीता |
| गी.भा. | भगवद्गीताभाष्यम् |
| छा. | छान्दोग्योपनिषत् |
| जै.सू. | जैमिनीयपूर्वमीमांसासूत्राणि |
| तै. | तैत्तिरीयोपनिषत् |
| तै.भा. | तैत्तिरीयभाष्यम् |
| प्र.भा. | प्रश्नोपनिषद्भाष्यम् |
| बृ. | बृहदारण्यकोपनिषत् |
| बृ.भा. | बृहदारण्यकोपनिषद्भाष्यम् |
| महा.नारा. | महानारायणोपनिषत् |
| मुं.भा. | मुण्डकोपनिषद्भाष्यम् |
| मो. | मोक्षधर्मः |
| वि.पु. | विष्णुपुराणम् |
| वा. | वाणीविलासमुद्रालयप्रकाशितपुस्तके पाठान्तरम् |
| शत. | शतपथब्राह्मणम् |
| शा.भा. | शाबरं भाष्यम् |
| श्वे. | श्वेताश्वतरोपनिषत् |

# अशुद्धिशोधनम्

| पृष्ठे | पंक्तौ | स्थाने | पठितव्यं |
|---|---|---|---|
| २ | १४ | सूत्रर्यन्तं | सूत्रपर्यन्तं |
| १६ | १० | इत्येदन्यै | इत्येदन्त्यं |
| १७ | ६ | इति (८) | इति (७) |
| २५ | १४ | मुखं | मुखं |
| २५ | १७ | प्रार्थयति | प्रार्थयते |
| ,, | १८ | असमाहिन | असमाहित |
| ३० | ४ | विरोघा | विरोधा |
| ३३ | २ | अव्यकृतोपासनया | अव्याकृतोपासनया |
| ,, | ४ | वलेन | बलेन |

**सूचना—** दर्शनमात्रेण सुबोधस्य मुद्रणस्खालित्यस्य नैवात्र निर्देशः कृतः। प्रमादादिदोषहेतोः समुपजातानामशुद्धीनां प्रबोधनेनानुगृह्णन्तु बुधा यथा तन्मार्जनाय यतिष्यते द्वितीयावृत्ताविति प्रार्थना ॥

## GENERAL PREFACE

The present edition of Sri Shankaracharya's Upanishad-Bhashyas, is intended for readers who wish to have at a moderate price the plain text of Shankara's works unencumbered by commentaries and sub-commentaries but provided with such aids to study as a beginner is likely to need in appreciating the original.

Every volume of the series has been provided with an Introduction, Short Notes on points of special interest, References to parallel passages in the other works of the great Acharya, a Summary of the Upanishad, and an Index.

It is hoped that the systematic division of the text into paragraphs with indication of important various readings, the tracing of quotations to their originals, and the close attention paid to typographical details will all combine to make this edition specially convenient for the earnest reader.

Publisher.

# प्रस्तावना

शुक्लयजुर्वेदस्य काण्वमाध्यन्दिनभेदेन द्वे शाखे सुप्रसिद्धे। तत्र काण्वपाठमनुरुध्यैव भगवत्पादैरीशावास्योपनिषदो भाष्यं निरमायि । सेयं संहितायाश्चत्वारिंशेऽध्याये समुपलभ्यमानत्वात् "संहितोपनिषद्" इत्यप्यभिधीयते क्वचित् ॥

कर्मकाण्डस्यान्तिमभागे पठितत्वादस्या उपनिषदः कर्मसंबन्धिज्ञानमेवात्र प्रतिपाद्यमिति, अस्या एकादशतमे मन्त्रे परमार्थज्ञानकर्मणोः समुच्चय एव विधित्सित इति, चतुर्दशे मन्त्रे परिणामवादः सूचित इति च केचिद् भाष्यकारा मेनिरे भर्तृप्रपञ्चभास्कराचार्यप्रभृतयः । भगवत्पादाः पुनः प्रवृत्तिनिवृत्तिलक्षणं वैदिकं धर्मद्वयविभागं सूचयित्वा, अकर्मशेषस्यात्मनो याथात्म्यप्रकाशनायैव प्राधान्येन प्रवृत्तेयमुपनिषदिति प्रदर्शयन्ति ॥

अत्र संक्षेपेण सूचितस्य विद्याविद्याविभागस्य सविस्तरं बृहदारण्यके प्रतिपादयिष्यमाणत्वात् तत्रैव वेदान्तसिद्धान्तः सपरिकरं अध्यवसेयो मुमुक्षुभिरिति

अध्यात्मप्रकाशकार्यालये,
माघ कृष्ण २

सुधियामनुचरः
य. सुब्रह्मण्यशर्मा

# भाष्ये विशेषविषयाः

-+*+++-+-

* ॐ *

श्रीमच्छाङ्करभाष्यसंयुता

# ईशावास्योपनिषत्

———*———

ॐ पूर्णमदः पूर्णमिदं । पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय । पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

## अथ भाष्यावतरणिका

'ईशावास्यम्' इत्यादयो मन्त्राः कर्मस्वविनियुक्ताः, तेषां अकर्मशेषस्यात्मनो* याथात्म्यप्रकाशकत्वात् । याथात्म्यं चात्मनः शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम् (७, ८) । तच्च कर्मणा विरुध्यत इति युक्त एवैषां कर्मस्वविनियोगः । न ह्येवंलक्षणमात्मनो याथात्म्यं उत्पाद्यं,† विकार्यं,

*. कर्मशेष आत्मा कर्तृत्वभोक्तृत्वादियुक्तः, जन्मान्तरलोकान्तरसम्बन्धी कर्मकाण्डेऽधिगतः; तद्भिन्न अकर्मशेषः ॥

†. सू. भा. १–१–४; बृ. भा. ३–३–१; तै. भा. १–१२.
उत्पाद्यं घटादिवत्, विकार्यं दध्यादिवत्, आप्यं ग्रामादिवत्, संस्कार्यं आदर्शादिवत् ॥

आप्यं, संस्कार्यं, कर्तृभोक्तृरूपं वा; येन कर्मशेषता स्यात् । सर्वासामुपनिषदां आत्मयाथात्म्यनिरूपणेनैवोपक्षयात्, गीतानां मोक्षधर्माणां चैवंपरत्वात् । तस्मात्, आत्मनोऽनेकत्वकर्तृत्व-भोक्तृत्वादि चाशुद्धत्वपापविद्धत्वादि चोपादाय लोकबुद्धिसिद्धं कर्माणि विहितानि । यो हि कर्मफलेनार्थी दृष्टेन ब्रह्मवर्चसादिना अदृष्टेन स्वर्गादिना च 'द्विजातिरहं न काणत्वकुब्जत्वाद्यनधि-कारप्रयोजकधर्मवान्'* इत्यात्मानं मन्यते सोऽधिक्रियते कर्मस्विति ह्यधिकारविदो† वदन्ति ॥

तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेन आत्मविषयं स्वाभाविकमज्ञानं‡ निवर्तयन्तः, शोकमोहादिसंसारधर्मविच्छित्ति-साधनमात्मैकत्वादिविज्ञानं उत्पादयन्तीति. एवमुक्ताधिकार्यभि-धेयसंबन्धप्रयोजनान्§ मन्त्रान् संक्षेपतो व्याख्यास्यामः ॥

---

*. 'काणत्वकुणित्वाद्य०' (इति वा. पुस्तके )॥

† शा. भा. जै. सू. ६–१–२५ तमसूत्रादारभ्य ४२ तमसूत्रपर्यन्तं द्रष्टव्यम् ॥

‡. 'स्वाभाविककर्मविज्ञान०'(इति वा. अ. पुस्तकयोः): स्वाभाविकं, अविचारदशायां स्वभावसिद्धम् ॥

§. आत्मयाथात्म्यमभिधेयम्, कर्मकाण्डनागतार्थत्वं संबन्धः, शोक-मोहादिविच्छित्तिः प्रयोजनं, तत्कामोऽधिकारीति विशिष्टाधिकार्यादिमत्त्वं मन्त्राणाम् ॥

अथोपनिषत्

# ईशावास्यमिदꣳ सर्वं
# यत्किंच जगत्यां जगत् ।
# तेन त्यक्तेन भुञ्जीथा
# मा गृधः कस्य स्विद्धनम् ॥ १ ॥

[इदं यत्किंच जगत्या जगत्, (तत्) सर्वं ईशा वास्यम् । तेन त्यक्तेन (आत्मानं) भुञ्जीथाः । कस्य स्विद् धनं मा गृधः ॥]

**ईशावास्यमिति** । ईशा—ईष्टे* इति ईट्. तेन ईशा । ईशिता परमेश्वरः परमात्मा सर्वस्य । स हि सर्वमीष्टे सर्वजन्तूनामात्मा सन् प्रत्यगात्मतया । तेन स्वेन रूपेणात्मना ईशा वास्यं—आच्छादनीयम्† । किम्? इदं सर्वं यत्किंच— यत्किंचित् जगत्यां— पृथिव्यां जगत् तत् सर्वम् । स्वेनात्मना ईशेन प्रत्यगात्मतया 'अहमेवेदं सर्वम्' इति परमार्थसत्यरूपेण अनृतमिदं‡ सर्वं चराचरं आच्छादनीयं परमात्मना§ । यथा चन्दनागर्वादेरुदकादिसंबन्धजक्लेदादिजं औपाधिकं दौर्गन्ध्यं तत्स्वरूपनिघर्षणेनाच्छाद्यते स्वेन पारमार्थिकेन गन्धेन, तद्वदेव हि स्वात्मन्यध्यस्तं

*. ईश—ऐश्वर्ये इति धातोः क्विपि रूपमीडिति ॥

†. वस—आच्छादने; ऋहलोर्ण्यदिति ण्यत्प्रत्यय इति भावः ॥

‡. तै. भा. २—६. §. गी. भा. १३—२२; १५—१७.

स्वाभाविकं कर्तृत्वभोक्तृत्वादिलक्षणं जगद्द्वैतरूपं जगत्यां--पृथिव्यां। 'जगत्याम्' इत्युपलक्षणार्थत्वात् सर्वमेव नामरूपकर्माख्यं विकारजातं परमार्थसत्यात्मभावनया त्यक्तं स्यात्। एवमीश्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रयसंन्यासे[†] एवाधिकारो न कर्मसु॥

तेन त्यक्तेन--त्यागेनेत्यर्थः। न हि त्यक्तो--मृतः पुत्रो भृत्यो वा आत्मसंबन्धिताया अभावादात्मानं पालयति; अतस्त्यागेनेत्ययमेवार्थः। भुञ्जीथाः पालयेथाः॥

एवं त्यक्तैषणस्त्वं मा गृधः--गृधिं आकाङ्क्षां मा कार्षीर्धनविषयाम्। कस्य स्विद् धनं--कस्यचित् परस्य स्वस्य वा धनं मा काङ्क्षीरित्यर्थः। 'स्वित्' इत्यनर्थको निपातः॥ अथवा--मा गृधः। कस्मात्? 'कस्य स्विद्धनम्?' इत्याक्षेपार्थः। न कस्यचिद्धनमस्ति यद् गृध्येत। 'आत्मैवेदं सर्वम्'[‡] इतीश्वरभावनया सर्वं त्यक्तम्; अत आत्मन एवेदं सर्वं, आत्मैव च सर्वम्। अतो मिथ्याविषयां गृधिं मा कार्षीरित्यर्थः॥

एवमात्मविदः पुत्राद्येषणात्रयसंन्यासेन आत्मज्ञाननिष्ठतया आत्मा रक्षितव्य इत्येष वेदार्थः। अथेतरस्य अनात्मज्ञतया आत्मग्रहणाशक्तस्य इदमुपदिशति मन्त्रः--

*. बृ. १-६-१, २, ३.

†. पुत्रैषणा, वित्तैषणा, लोकैषणेत्येषणात्रयम्: बृ. ३-५-१, ४-४-२२.

‡. छां. ७-२५-१.

**कुर्वन्नेवेह कर्माणि**
**जिजीविषेच्छतꣳ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति**
**न कर्म लिप्यते नरे ॥ २ ॥**

[इह कर्माणि कुर्वन्नेव शतं समाः जिजीविषेत् । एवं त्वयि नरे इतो नान्यथा अस्ति, (येन) कर्म न लिप्यते ॥]

कुर्वन्नेवेति । कुर्वन्नेव—निर्वर्तयन्नेव इह कर्माणि -- अग्निहोत्रादीनि जिजीविषेत् - जीवितुमिच्छेत् शतं -- शतसङ्ख्याकाः समाः--संवत्सरान् । तावद्धि पुरुषस्य परमायुर्निरूपितम्* । तथा च प्राप्तानुवादेन† 'यज्जिजीविषेच्छतं वर्षाणि, तत् कुर्वन्नेव कर्माणि' इत्येतद्विधीयते ॥

एवं– एवंप्रकारेण त्वयि-- जिजीविषति नरे -- नरमात्राभिमानिनि इतः-- एतस्मात् अग्निहोत्रादीनि कर्माणि कुर्वतो वर्तमानात् प्रकारात्, अन्यथा-- प्रकारान्तरं नास्ति, येन प्रकारेण अशुभं‡ कर्म न लिप्यते -- कर्मणा न लिप्यसे इत्यर्थः । अतः शास्त्रविहितानि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव जिजीविषेत् ॥

*. तै. भा. २–३.

†. शतं समा जिजीविषेदिति न विधीयते, प्राप्तत्वात् । कुर्वन्नेवेति तु विधीयते ॥

‡. प्रत्यवायजनकत्वादिलक्षणम् ॥

कथं पुनरिदमवगम्यते पूर्वेण मन्त्रेण संन्यासिनो ज्ञाननिष्ठोक्ता, द्वितीयेन तदशक्तस्य, कर्मनिष्ठेति? उच्यते । ज्ञानकर्मणोर्विरोधं पर्वतवदकम्प्यं यथोक्तं न स्मरसि किम्? इहाप्युक्तम्— "यो हि जिजीविषेत् स कर्माणि† कुर्वन्नेवेति ।" "ईशा वास्यमिदं सर्वं, तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्" इति च । "न जीविते मरणे वा गृधिं कुर्वीतारण्यमियादिति च पदं; ततो न पुनरियात ॥"(?) इति संन्यासशासनात् । उभयोः फलभेदं च वक्ष्यति‡ । "इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः क्रियापथश्चैव पुरस्तात् संन्यासश्चोत्तरेण निवृत्तिमार्गेण एषणात्रयस्य त्यागः । तयोः संन्यासपथ एवातिरेचयति"(?) "न्यास एवात्यरेचयत" (महा. नारा. २१-२) इति च तैत्तिरीयके । "द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तश्च§ विभाषितः ।" (मो. २४१-६) इत्यादि पुत्राय विचार्य निश्चितमुक्तं व्यासेन वेदाचार्येण भगवता । विभागं चानयोर्दर्शयिष्यामः ॥

*. अनेकत्वकर्तृत्वादिलोकबुद्धिसिद्धमुपादाय कर्माणि विहितानि, एकत्वाकर्तृत्वादिज्ञापनार्थं ईशावास्यमित्यादिमन्त्राः प्रवृत्ता इत्युक्तं संबन्धग्रन्थे ॥

†. 'कर्म कुर्वन्' (आ.)

‡. 'को मोहः कः शोक' इति विद्याफलं दर्शमं, तत परं कर्मफलं च वक्ष्यति ॥

§. 'निवृत्तौ च विभावितः' इति मुम्बापुरीमुद्रितग्रन्थे ॥

अथेदानीमविद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते --

**असुर्या नाम ते लोका**
**अन्धेन तमसावृताः ।**
**ताꣳस्ते प्रेत्याभिगच्छन्ति**
**ये के चात्महनो जनाः ॥ ३ ॥**

[(ये) अन्धेन तमसा आवृताः, ते असुर्या नाम लोकाः । तान्, ये के च आत्महनो जनाः ते प्रेत्य अभिगच्छन्ति ॥]

असुर्या इति । असुर्याः-परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुराः, तेषां च स्वभूता लोका असुर्या नाम । नामशब्दोऽनर्थको निपातः । ते लोकाः -- कर्मफलानि, लोक्यन्ते दृश्यन्ते भुज्यन्ते इति जन्मानि । अन्धेन अदर्शनात्मकेन अज्ञानेन तमसा आवृताः - आच्छादिताः । तान् स्थावरान्तान्* प्रेत्य - त्यक्त्वेमं देहं अभिगच्छन्ति "यथा कर्म यथा श्रुतम्" (क. २-२-७) । ये के च आत्महनः -- आत्मानं घ्नन्तीत्यात्महनः । के ते? जनाः-येऽविद्वांसः† । कथं ते आत्मानं नित्यं हिंसन्ति? अविद्यादोषेण

*. उपासनापूर्वकं धर्माख्यं कर्म देवलोकादिब्रह्मलोकान्तप्राप्तिफलं केवलं पितृलोकादिप्राप्तिफलं, अधर्ममिश्रितं मनुष्यत्वप्राप्तिफलं, अधर्म संज्ञकमुपचीयमानं स्थावरान्तप्राप्तिफलम्; तदेवं ब्रह्मादिस्थावरान्तफलं कर्म ॥

†. अविद्वत्त्वमेव जन्मकारणमिति जनशब्देन सूचितमिति भावः ॥

विद्यमानस्यात्मनस्तिरस्करणात् । विद्यमानस्य आत्मनो यत्कार्यं फलं अजरामरत्वादिसंवेदनलक्षणं,* तद् हतस्येव तिरोभूतं भवतीति प्राकृता अविद्वांसो जना आत्महन इत्युच्यन्ते । तेन ह्यात्महननदोषेण संसरन्ति ते ॥

यस्यात्मनो हननादविद्वांसः संसरन्ति, तद्विपर्ययेण विद्वांसो मुच्यन्तेऽनात्महनः, तत्कीदृशमात्मतत्त्वमिति? उच्यते--

**अनेजदेकं मनसो जवीयो**
**नैनद्देवा आप्नुवन् पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येति तिष्ठत्**
**तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥**

['तद् अनेजत्, एकं, मनसो जवीयः । एनत् देवाः न आप्नुवन्, पूर्वमर्षत् । तिष्ठत् (सत्) धावतोऽन्यान् अत्येति । तस्मिन् (सति) मातरिश्वा अपः दधाति ॥]

अनेजदिति । अनेजत् -- न एजत् । 'एजृ कम्पने'; कम्पनं चलनं स्वावस्थाप्रच्युतिः, तद्वर्जितम् । सर्वदा एकरूपमित्यर्थः । तच्च एकं सर्वभूतेषु† । मनसः -- संकल्पादिलक्षणात् जवीयः -- जववत्तरम् । कथं विरुद्धमुच्यते 'ध्रुवं निश्चलमिदं, मनसो जवीय' इति च? नैष दोषः, निरुपाध्युपाधिमत्त्वेनोपपत्तेः ।

*. 'संवेदनादि' (वा.)

†. षष्ठो मन्त्रो द्रष्टव्यः; गी. १३-२७; क. २-२-९.

तत्र निरुपाधिकेन स्वेन रूपेणोच्यते 'अनेजदेकम्' इति; मनसोऽन्तःकरणस्य संकल्पविकल्पलक्षणस्योपाधेः* अनुवर्तनात् इह देहस्थस्य मनसो ब्रह्मलोकादिदूरगमनं† संकल्पेन क्षणमात्राद्भवतीत्यतः मनसो जविष्ठत्वं लोके प्रसिद्धम्; तस्मिन् मनसि ब्रह्मलोकादीन् द्रुतं गच्छति सति प्रथमप्राप्त इवात्मचैतन्याभासो‡ गृह्यते, अतो 'मनसो जवीय' इत्याह ॥

नैनद् देवा - द्योतनाद्देवाः§ चक्षुरादीनीन्द्रियाणि एनत्-प्रकृतमात्मतत्त्वं नाप्नुवन् -- न प्राप्तवन्तः । तेभ्यो मनो जवीयः । मनोव्यापारव्यवहितत्वादाभासमात्रमप्यात्मनो नैव देवानां विषयीभवति; यस्मात् जवनान्मनसोऽपि पूर्वं अर्षत्× -- पूर्वमेव गतं, व्योमवद्व्यापित्वात् ॥

सर्वव्यापि तदात्मतत्त्वं सर्वसंसारधर्मवर्जितं स्वेन निरुपाधिकेन स्वरूपेण अविक्रियमेव सत्, उपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीव अविवेकिनां मूढानां अनेकमिव च प्रतिदेहं प्रत्यवभासते** इत्येतदाह — तद् धावतः -- द्रुतं गच्छतः

*. अवच्छेद्यवस्तुन्यनन्तःप्रविष्ट एव यो व्यावर्तयति स उपाधिः ॥

†. 'ब्रह्मलोकादिदूरस्थसंकल्पनं क्षणमात्राद्भवति' (वा.)

‡. कर्तृत्वभोक्तृत्वादियुतो जलसूर्यकादिवत्कल्पितरूपो जीवात्मा चैतन्याभासः ॥ छा. ६-३-२ : प्र. भा. ४-९.

§. तै. भा. २-३.

×. ऋषी गतौ इति धातोः ॥

**. गी. भा. १३-१४, १६.

अन्यान्--आत्मविलक्षणान्* मनोवागिन्द्रियप्रभृतीन् अत्येति--अतीत्य गच्छतीव । इवार्थं स्वयमेव दर्शयति - तिष्ठदिति । स्वयमविक्रिय एव सदित्यर्थः ॥

तस्मिन्--आत्मतत्त्वे सति नित्यचैतन्यस्वभावे मातरिश्वा मातरि अन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायुः ; सर्वप्राणिभृत्क्रियात्मको यदाश्रयाणि कार्यकरणजातानि, यस्मिन् ओतानि प्रोतानि च, यत् सूत्रसंज्ञकं† सर्वस्य जगतो विधारयितृ, स मातरिश्वा, अपः‡- कर्माणि प्राणिनां चेष्टालक्षणानि अग्न्यादित्यपर्जन्यादीनां ज्वलनदहनप्रकाशाभिवर्षणादिलक्षणानि दधाति--विभजतीत्यर्थः, धारयतीति वा ; "भीषास्माद्वातः पवते" (तै. २-८) इत्यादिश्रुतिभ्यः । सर्वा हि कार्यकरणविक्रिया नित्यचैतन्यात्मस्वरूपे सर्वास्पदभूते सत्येव भवन्तीत्यर्थः ॥

न मन्त्राणां जामितास्तीति§ पूर्वमन्त्रोक्तमप्यर्थं पुनराह -

**तदेजति तन्नैजति**
**तद्दूरे तद्वन्तिके ।**

*. विषयभूतान्, जडात्मकान् ॥ †. बृ. ३-७-२.

‡. कर्माण्यग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणीत्यतः कर्माण्यप इत्युच्यन्ते वेदे तत्र तत्र; बृ. भा. ५-५-१.

§. जामिता – सादृश्यं, एकरूपा द्विःक्रिया, पुनरुक्तिदोष इति यावत् ॥ शा. भा. जै. सू. १०-८-६३.

**तदन्तरस्य सर्वस्य**

**तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥**

[तद एजति, तन्नैजति ; तद् दूरे, तद्‌ अन्तिके ; तद् अस्य सर्वस्य अन्तः, तदु अस्य सर्वस्य बाह्यतः ॥]

**तदेजतीति** । तद् - आत्मतत्त्वं यत् प्रकृतं एजति - चलति;* तदेव च नैजति - स्वतो नैव चलति । स्वतोऽचलमेव सत् चलतीवेत्यर्थः ॥

किं च तद्दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद् दूरे इव । तद् - उ अन्तिके - समीपेऽत्यन्तमेव विदुषां, आत्मत्वात् । न केवलं दूरे अन्तिके च,† तद् अन्तः - अभ्यन्तरे अस्य सर्वस्य; "य आत्मा सर्वान्तरः" इति श्रुतेः (बृ. ३-४-१) । अस्य सर्वस्य--जगतो नामरूपक्रियात्मकस्य । तद् उ सर्वस्यास्य बाह्यतः, व्यापकत्वात् आकाशवत् ; निरतिशयसूक्ष्मत्वाद्‡ अन्तः; "प्रज्ञानघन एव" (बृ. ४-६-१३) इति शासनात् निरन्तरं§ च ॥

**यस्तु सर्वाणि भूतानि**

**आत्मन्येवानुपश्यति ।**

**सर्वभूतेषु चात्मानं**

**ततो न विजुगुप्सते ॥ ६ ॥**

*. उपाधिचलनेन चलतीव ॥      †. मुं. भा. ३-१-७.

‡. अतीन्द्रियत्वात् ॥      §. अखण्डैकरसस्य विच्छेदानुपपत्तेः ॥

[यस्तु सर्वाणि भूतानि आत्मन्येव अनुपश्यति, सर्वभूतेषु च आत्मानं (अनुपश्यति), (स) ततो न विजुगुप्सते ॥]

यस्तु । यः-परिव्राट्* मुमुक्षुः सर्वाणि भूतानि--अव्यक्तादीनि† स्थावरान्तानि आत्मन्येव अनुपश्यति आत्मव्यतिरिक्तानि‡ न पश्यतीत्यर्थः । सर्वभूतेषु-तेष्वेव च आत्मानं-तेषामपि भूतानां स्वमात्मानं आत्मत्वेन 'यथा अस्य देहस्य कार्यकरणसङ्घातस्य आत्मा अहं सर्वप्रत्ययसाक्षिभूतश्चेतयिता§ केवलो निर्गुणः, अनेनैव स्वरूपेण अव्यक्तादीनां स्थावरान्तानां अहमेव आत्मा' इति सर्वभूतेषु चात्मानं निर्विशेषं यस्त्वनुपश्यति, सः ततः-तस्मादेव दर्शनात् न विजुगुप्सते-विजुगुप्सां घृणां न करोति ॥

प्राप्तस्यैव अनुवादोऽयम् । सर्वा हि घृणा× आत्मनोऽन्यद् दुष्टं पश्यतो भवति; आत्मानमेव अत्यन्तविशुद्धं निरन्तरं पश्यतो न घृणानिमित्तमर्थान्तरमस्तीति प्राप्तमेव** ततो न विजुगुप्सत इति ॥

*. एषणात्यागिनो निरभिमानिन एव सम्यग्ज्ञानमुदेतीत्यत आह–परिव्राडिति ॥

†. अस्य नामरूपकर्मात्मना व्याकृतस्य प्रपञ्चस्य प्रागवस्था, अव्याकृतरूपा अव्यक्तशब्दवाच्या ॥ बृ. भा. १–४–१: मुं. भा. २–१–२. सू. भा. १–४–२.

‡. तै. भा. २-६: गी. भा. २–८.

§. श्वे. ६–११: सत्यज्ञानानन्तानन्दपरमात्मरूपेणाहं सर्वस्यात्मेति पश्यतीत्यर्थः ॥

×. निन्दा ॥

**. अद्वितीयात्मनो द्वेषविषयाभावादेव न विजुगुप्सत इत्युक्तं, न तु सर्वात्मभावदर्शनात् परं निन्दा न भवतीत्यानन्तर्यं ततःशब्देन विवक्षितमिति भावः ॥

इममेवार्थं अन्योऽपि मन्त्र आह --

**यस्मिन् सर्वाणि भूतानि**
**आत्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक**
**एकत्वमनुपश्यतः ॥ ७ ॥**

[यस्मिन् विजानतः सर्वाणि भूतानि आत्मैव अभूत्, तत्र एकत्वं ानुपश्यतः को मोहः, कः शोकः ?]

**यस्मिन् सर्वाणि भूतानि** । यस्मिन्-काले यथोक्तात्मनि ा तान्येव भूतानि सर्वाणि परमार्थात्मदर्शनाद् आत्मैवाभूत् -- ात्मैव संवृत्तः परमार्थवस्तु विजानतः, तत्र - तस्मिन् काले तत्रा- मनि वा को मोहः कः शोकः ? शोकश्च* मोहश्च कामकर्म- ीजं अजानतो भवति, न त्वात्मैकत्वं विशुद्धं गगनोपमं† श्यतः ॥

'को मोहः कः शोकः ?' इति शोकमोहयोरविद्याकार्ययो- ाक्षेपेणासंभवप्रदर्शनात् सकारणस्य संसारस्यात्यन्तमेवोच्छेदः दर्शितो भवति ॥

* शोकः - इष्टं वस्तूद्दिश्य चिन्तयतो यदरमणं तत्तृष्णाभिभूतस्य ामबीजं: मोहस्तु विपरीतप्रत्ययप्रभवोऽविवेको भ्रमः ॥ बृ. भा. ३-५-१: ै. भा. संबन्धग्रन्थः ॥

† उ. सा. प. १४-५०. (स्वप्नस्मृतिप्रकरणे)

योऽयमतीतैर्मन्त्रैरुक्त आत्मा, स [illegible] रूपेण किंलक्षण इत्याह अयं मन्त्रः —

**स पर्यगाच्छुक्रमकायमव्रणं**
**अस्नाविरꣳ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूः स्वयंभू-**
**र्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः**
**समाभ्यः ॥ ८ ॥**

[स पर्यगात् । शुक्रं, अ[illegible] [illegible] [illegible] [illegible] [illegible]विद्धम् । कविः, मनीषी, परिभूः [illegible] । [illegible] [illegible] याथातथ्यतः अर्थान् व्यदधात ॥]

स पर्यगात् । सः - यथोक्त आत्मापर्यगात् परि समन्तात् अगात् गतवान्; आकाशवद् व्यापीत्यर्थः । शुक्रं - शुभ्रं, ज्योतिष्मत्; दीप्तिमानित्यर्थः । अकायं अशरीरं; लिङ्गशरीरवर्जित इत्यर्थः । अव्रणम् - अक्षतम् । अस्नाविरं स्नावाः सिराः* यस्मिन् न विद्यन्त इत्यस्नाविरम् । 'अव्रणमस्नाविरं' इत्येताभ्यां स्थूलशरीर-प्रतिषेधः । शुद्धं - निर्मलं, अविद्यामलरहितमिति कारणशरीर-प्रतिषेधः । अपापविद्धं - धर्माधर्मादिपापवर्जितम् । 'शुक्रम्' इत्यादीनि वचांसि पुल्लिङ्गत्वेन परिणेयानि,† 'स पर्यगात्' इत्युपक्रम्य

*. सिराः — नाड्यः ॥

†. 'शुक्रः, अकायः, अव्रणः, अस्नाविरः, शुद्धः, अपापविद्धः' — इत्येवं लिङ्गविपरिणामः कर्तव्य इति भावः ॥

कविर्मनीषी' इत्यादिना पुल्लिङ्गत्वेनोपसंहारात् । कविः - क्रान्तदर्शी* - सर्वदृक्, 'नान्योतोऽस्ति द्रष्टा' (बृ. ३-७-२३) इत्यादिश्रुतेः । मनीषी - मनसो† ईशिता सर्वज्ञ ईश्वर इत्यर्थः । परिभूः - सर्वेषां परि उपरि भवतीति परिभूः । स्वयम्भूः - स्वयमेव भवतीति; येषां उपरि भवति यश्चोपरि भवति स सर्वः स्वयमेव भवतीति स्वयंभूः । स नित्यमुक्त ईश्वरो याथातथ्यतः - सर्वज्ञत्वात्; यथा तथा भावो याथातथ्यं, तस्मात्, यथाभूतकर्मफलसाधनतः‡ अर्थान् - कर्तव्यपदार्थान् व्यदधात् - विहितवान्, यथानुरूपं व्यभजदित्यर्थः । शाश्वतीभ्यः§ - नित्याभ्यः समाभ्यः - संवत्सराख्येभ्यः प्रजापतिभ्य इत्यर्थः ॥

अत्राद्येन मन्त्रेण सर्वैषणापरित्यागेन ज्ञाननिष्ठोक्ता प्रथमो वेदार्थः — "ईशावास्यमिदं सर्वं ....मा गृधः कस्यस्विद्धनम्" (१) इति । अज्ञानां जिजीविषूणां ज्ञाननिष्ठासंभवे "कुर्वन्नेवेह कर्माणि जिजीविषेत्" (२) इति कर्मनिष्ठोक्ता द्वितीयो वेदार्थः । अनयोश्च निष्ठयोर्विभागो मन्त्रद्वयप्रदर्शितयोर्बृहदारण्यकेऽपि प्रदर्शितः — "सोऽकामयत जाया मे स्यात्" (बृ. १-४-१७) इत्यादिना

* इन्द्रियमतिक्रान्तस्य भूतभविष्यत्कालगस्यापि द्रष्टा ॥

† मननादिव्यापारनियन्ता, मनसोऽपि साक्षीत्यर्थः ॥

‡ अस्य कर्मण इदं फलं निश्चितं भवितेति नियमगोचरत्वमेव याथातथ्यं, न पुनः परमार्थसत्यता ॥

§ प्रजापतित्वं तत्तत्कल्पान्तस्थायीत्यत उक्तं 'शाश्वतीभ्य' इति ॥

अज्ञस्य कामिनः कर्माणीति । "मन एवास्यात्मा वाग्जाया" (बृ. १-४-१७) इत्यादिवचनादज्ञत्वं[*] कामित्वं च कर्मनिष्ठस्य निश्चितमवगम्यते । तथा च तत्फलं सप्तान्नसर्गः[†] (बृ. १-५-२) तेष्वात्मभावेनात्मस्वरूपावस्थानम्[‡] । जायाद्येषणात्रयसंन्यासेन चात्मविदां कर्मनिष्ठाप्रातिकूल्येन आत्मस्वरूपनिष्ठैव दर्शिता - "किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः" (बृ.४-४-२२) इत्यादिना ॥

ये तु ज्ञाननिष्ठाः संन्यासिनः, तेभ्यः "असुर्या नाम ते" (३) इत्यादिना अविद्वन्निन्दाद्वारेण आत्मनो याथात्म्यं "स पर्यगात्" (८) इत्येतदन्तैर्मन्त्रैरुपदिष्टम्; ते ह्यत्राधिकृता न कामिन इति । तथा च श्वेताश्वतराणां मन्त्रोपनिषदि "अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्" (श्वे. ६-२१) इत्यादि विभज्योक्तम्[§] । ये तु कामिनः कर्मनिष्ठाः कर्म कुर्वन्तः

* अनेन वचनेन बाह्यजायाद्यप्राप्त्या आत्मानमकृत्स्नं मन्यमानस्य कृत्स्नतासंपादनार्थं अध्यात्मजायादिसंपत्तिर्निर्दिश्यते । अतः कर्मनिष्ठोऽज्ञ मनआदिष्वात्मत्वाद्यभिमानवत्त्वात् ॥

†. एकं साधारणमन्नं यदिदमद्यते, द्वे देवानां दर्शपूर्णमासौ, त्रीण्यात्मार्थं भोगसाधनानि मनोवाक्प्राणलक्षणानि, पश्वर्थमेकं पयः - इति सप्तान्नसृष्टिः कर्मफलम् ॥

‡. तेष्वहंममाभिमानः ॥

§. कामिभ्यो कर्माधिकारिभ्यो विभज्य अत्याश्रमिणां संन्यासिनां एवात्र विद्याया अधिकार इत्युक्तम् ॥

जिजीविषवः, तेभ्य इदमुच्यते — "अन्धं तमः" (९)
ादि ॥

कथं पुनरेवमवगम्यते, न तु सर्वेषामिति? उच्यते ।
ामिनः साध्यसाधनभेदोपमर्देन "यस्मिन् सर्वाणि भूतान्या-
ाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः"
। (८)यदात्मैकत्वविज्ञानं, तन्न केनचित्कर्मणा ज्ञानान्तरेण* वा
ढः समुच्चिचीषति† । इह तु समुच्चिचीषया अविद्वदादिनिन्दा
यते । तत्र च यस्य येन समुच्चयः संभवति न्यायतः शास्त्रतो
तदिहोच्यते, यद् दैवं वित्तं‡ देवताविषयं ज्ञानं कर्मसम्बन्धि-
ोपन्यस्तं न परमात्मज्ञानं, "विद्यया देवलोकः"(बृ.१-५-१६)
पृथक्फलश्रवणात्§ । तयोर्ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा
च्चिचीषया न निन्दापरैव, एकैकस्य पृथक्फलश्रवणात् ×
ेद्यया तदारोहन्ति"** (शत. १०-५-४-१६), "विद्यया
ोकः" (बृ.१-५-१६), "न तत्र दक्षिणा यन्ति",** (शत.

*. उपासनेन वा, तस्यापि मानसकर्मत्वात् ॥

†. समुच्चित्यानुष्ठातुमिच्छति ॥

‡. मानुषं वित्तं कर्म, दैवं वित्तं देवतोपासनम्; बृ.भा. १-४-१७.

§. देवतोपासनारूपस्य फलं मोक्षादन्यदेव देवलोकलक्षणं पृथक्
ते ॥

×. न हि फलवद्विधीयते श्रुत्या, तदेव निन्द्यते च इति युक्तम् ॥

**. "विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥" इति पूर्णं वचनम् ।

१०-५-४-१६), "कर्मणा पितृलोकः" (बृ. १-५-१६) इति । न हि शास्त्रविहितं * किंचिदकर्तव्यतामियात् ॥

तत्र—

**अन्धं तमः प्रविशन्ति**
**येऽविद्यामुपासते ।**
**ततो भूय इव ते**
**तमो य उ विद्यायाꣳ रताः ॥ १ ॥**

[ ये अविद्यां उपासते, (ते) अन्धं तमः प्रविशन्ति । ये उ विद्यायां रताः, ते ततो भूय इव तमः (प्रविशन्ति) ॥ ]

अन्धं तमः– अदर्शनात्मकं तमः प्रविशन्ति । के ? ये अविद्यां– विद्याया अन्या अविद्या, कर्मेत्यर्थः; कर्मणो विद्याविरोधित्वात्,† तां अविद्यां -- अग्निहोत्रादिलक्षणामेव केवलां उपासते-- तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः । ततः-- तस्माद् अन्धात्मकात् तमसः भूय इव -- बहुतरमेव ते तमः‡ प्रविशन्ति । के ? कर्म हित्वा ये उ-- ये तु विद्यायामेव - देवताज्ञाने एव रताः -- अभिरताः ॥

*. विहितस्य अकर्तव्यत्वे, न किञ्चित् शास्त्रीयं कर्म कर्तव्यं इति प्रसज्येत ॥

†. कर्तृत्वबुद्धियुक्तस्य कर्म, अकर्तृत्वबुद्धियुक्तस्य च ज्ञानमिति स्फुटो विरोधः; तस्माद् विरोधार्थे नञिति भावः ॥

‡. अहंममाभिमानरूपम् ॥

तत्रावान्तरफलभेदं विद्याकर्मणोः समुच्चयकारणमाह ; अन्यथा फलवदफलवतोः सन्निहितयोरङ्गाङ्गितया* जामितैव† स्यादिति—

अन्यदेवाहुर्विद्यया
अन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां
ये नस्तद्विचचक्षिरे ॥ १० ॥

[ विद्यया अन्यद् एव ( फलं ) आहु, अविद्यया अन्यत् ( फलं ) आहु. । इति धीराणा वचनं शुश्रुम, ये न तद् विचचक्षिरे ॥ ]

अन्यदेवेति । अन्यत्-- पृथगेव विद्यया क्रियते फलमिति आहुः-- वदन्ति "विद्यया देवलोक." ( बृ. १-५-१६ ). "विद्यया तदारोहन्ति" (शत. १०-५-४-१६) इति श्रुतेः । अन्यद् आहुः अविद्यया-- कर्मणा क्रियते फलमिति । "कर्मणा पितृलोकः" (बृ.१-५-१६ ) इति श्रुतेः‡ । इति – एवं शुश्रुम – श्रुतवन्तो वयं धीराणां - धीमतां वचनं. ये आचार्याः नः - अस्मभ्यं

*. 'अङ्गाङ्गितैव स्यात' (आ.)

†. अङ्गाङ्गित्वेनैव समुच्चयः सिद्धः, अङ्गविहीनस्य फलाधायकत्वाभावात् ; तस्मादङ्गाङ्गिनोः समुच्चयोऽर्थसिद्ध इति तस्यैव विधाने पुनरुक्तिः स्यादिति भावः ॥

‡. "आहुः – वदन्ति, अन्यदाहुरविद्यया कर्मणा क्रियते फलमिति । तथोक्तम् —'कर्मणा पितृलोक', विद्यया देवलोकः' " (वा.)

तत्– कर्म च ज्ञानं च विचचक्षिरे - व्याख्यातवन्तः, तेषाम् । अयमागमः* पारम्पर्यागत इत्यर्थः ॥

यत एवं† अतः —

**विद्यां चाविद्यां च**
**यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्युं तीर्त्वा**
**विद्ययामृतमश्नुते । ॥ ११ ॥**

[यः विद्यां च अविद्यां च तद् उभयं सह वेद, (सः) अविद्यया मृत्युं तीर्त्वा विद्यया अमृतं अश्नुते ॥ ]

विद्यां चेति । विद्यां चाविद्यां च देवताज्ञानं कर्म च इत्यर्थः । यः तद्– एतदुभयं सह एकेन पुरुषेण अनुष्ठेयं‡ वेद ; तस्यैवं समुच्चयकारिण एव एकपुरुषार्थसंबन्धः§ क्रमेण स्यादित्युच्यते — अविद्यया- कर्मणा अग्निहोत्रादिना मृत्युं स्वाभाविकं× कर्म ज्ञानं च मृत्युशब्दवाच्यमुभयं तीर्त्वा - अतिक्रम्य विद्यया– देवताज्ञानेन अमृतं – देवतात्मभावं अश्नुते - प्राप्नोति । तद्धि अमृतत्वमुच्यते,** यद्देवतात्मगमनम् ॥

*. उपदेशः ॥ †. कर्माकर्मणोः पृथक्फलवत्त्वात् ।

‡. युगपदित्यर्थः । अस्यार्थः माण्डूक्यकारिकादिभाष्यान्तरेऽन्यथैव वर्णितो दृश्यते; परिशिष्टे द्रष्टव्यम् ॥

§. 'एकैकपुरुषार्थसंबन्धः' (वा.) ×. अशास्त्रविहितम् ।

**. तदपि देवतात्मगमनं बहुकालस्थायित्वादमृतमुच्यते गौण्या वृत्त्या ॥

अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते —

**अन्धं तमः प्रविशन्ति**
**येऽसंभूतिमुपासते ।**
**ततो भूय इव ते**
**तमो य उ संभूत्याꣳ रताः ॥ १२ ॥**

[ये असंभूतिं उपासते, (ते) अन्धं तमः प्रविशन्ति । ये उ संभूत्यां रताः ते ततो भूयः इव तमः (प्रविशन्ति) ॥ ]

**अन्धं तमः प्रविशन्ति ये** ॥ असंभूतिं — संभवनं संभूतिः, सा यस्य कार्यस्य सा संभूतिः; तस्या अन्या असंभूतिः, प्रकृतिः, कारणं अविद्या, अव्याकृताख्या*; तां असंभूतिं— अव्याकृताख्यां प्रकृतिं कारणं अविद्यां कामकर्मबीजभूतां† अदर्शनात्मिकां उपासते ये, ते तदनुरूपमेव अन्धं तमः — अदर्शनात्मकं प्रविशन्ति। ततः तस्मादपि भूयः— बहुतरमिव तमः प्रविशन्ति ये उ संभूत्यां— कार्यब्रह्मणि हिरण्यगर्भाख्ये‡ रताः ॥

* व्याकृतं साध्यसाधनरूपेण व्यक्तं जगत्; अव्याकृतं तथानभिव्यक्तं प्रागवस्थम्। नच अविद्याकल्पितमिति अविद्येत्युच्यते ॥

† अविद्यैव हि कामकर्मणोर्मूलम् । अव्याकृतस्याविद्यात्मकस्याभावे न व्याकृतं जगत्, तदभावे न कामकर्मणीति कामकर्मणोर्बीजमव्याकृतम् ॥

‡ मुं. भा. १-१-८.

ई. ५

अधुना उभयोरुपासनयोः समुच्चय [illegible] फलभेद-
माह ।

अन्यदेवाहुः संभवा-
दन्यदाहुरसंभवात् ।
इति शुश्रुम धीराणां
ये नस्तद्विचचक्षिरे ॥ १३ ॥

[संभवाद् अन्यद् एव (फलं) [illegible]
इति धीराणां (वचनं) शुश्रुम, ये न [illegible] ॥

अन्यदेवेति ॥ अन्यदेव पृथगेव आहुः फलं [illegible] संभूतेः, कार्यब्रह्मोपासनात्, अणिमाद्यैश्वर्यलक्षणं व्याख्यातवन्त इत्यर्थः । तथा च अन्यद् आहुः असंभवात् असंभूतेः अव्याकृतोपासनात् । यदुक्तं- - "अन्धं तमः प्रविशन्ति" । ९. इति । "प्रकृतिलय इति च पौराणिकैरुच्यते" । इति एव शुश्रुम धीराणां वचनं, ये नः तद् विचचक्षिरे व्याकृताव्याकृतोपासन फलं व्याख्यातवन्त इत्यर्थः ॥

यत एवं, अतः समुच्चयः संभूत्यसंभूत्युपासनयोर्युक्त एव, एकपुरुषार्थत्वाच्चेत्याह ।

* दशममन्त्रावतरणिका द्रष्टव्या ॥

† वि. पु १–७–३८; [illegible]
लयस्यापि पुरुषेणार्थ्यमनत्वमुपपद्यते ॥ [illegible]

संभूतिं च विनाशं च
यस्तद्वेदोभयं सह ।
विनाशेन मृत्युं तीर्त्वा-
संभूत्यामृतमश्नुते ॥ १४ ॥

[यः संभूतिं च विनाशं च उभयं सह वेद, (सः) विनाशेन मृत्युं तीर्त्वा असंभूत्या अमृतं अश्नुते ॥]

संभूतिं चेति । संभूतिं च विनाशं च यस्तद्वेद उभयं सह,* विनाशेन विनाशो धर्मो यस्य कार्यस्य स तेन धर्मिणा अभेदेनोच्यते 'विनाश' इति । तेन तदुपासनेन अनैश्वर्यं अधर्मकामादिदोषजातं च मृत्युं तीर्त्वा ; हिरण्यगर्भोपासनेन हि अणिमादिप्राप्तिः फलं, तेन अनैश्वर्यादि मृत्युं अतीत्य: असंभूत्या अव्याकृतोपासनया अमृतं प्रकृतिलयलक्षणं अश्नुते । "संभूतिं च विनाशं च" इत्यत्र अवर्णलोपेन† निर्देशो द्रष्टव्यः, प्रकृतिलयफलश्रुत्यनुरोधात्‡ ॥

मानुषदैववित्तसाध्यं§ फलं शास्त्रलक्षणं प्रकृतिलयान्तम् । एतावती संसारगतिः । अतः परं पूर्वोक्तं "आत्मैवाभूद्विजानतः".

* युगपत् समुच्चित्य । 'असंभूतिं च विनाशं च' इत्येवं द्रष्टव्यः ।

‡ असंभूत्या अमृतमश्नुते- इति प्रकृतिलयप्राप्तिः श्रुता : तदन्यथानुपपत्तिः प्रमाणं अवर्णलोपेन निर्देश इत्यत्र ॥

§ बृ. १.४–१५

इति (७) सर्वात्मभाव एव सर्वैषणासंन्यासज्ञाननिष्ठाफलम् * । एवं द्विप्रकारः प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽत्र प्रकाशितः । तत्र प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेधलक्षणस्य कृत्स्नस्य प्रकाशने प्रवर्ग्यान्तं ब्राह्मणं उपयुक्तम्; निवृत्तिलक्षणस्य प्रकाशने अत ऊर्ध्वं बृहदारण्यकं उपयुक्तम् । तत्र निषेकादिश्मशानान्तं कर्म कुर्वन् जिजीविषेद् यो विद्यया सह अपरब्रह्मविषयया †, तदुक्तम् – "विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" (११) इति । तत्र केन मार्गेण अमृतत्वमश्नुत इति ? उच्यते

हिरण्मयेन पात्रेण
सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु
सत्यधर्माय दृष्टये ॥ १५ ॥

[पूषन्, हिरण्मयेन पात्रेण सत्यस्य मुखं अपिहितम् । तत् त्वं सत्यधर्माय (मह्य) दृष्टये अपावृणु ॥]

* सर्वैषणासंन्यासेन ज्ञाननिष्ठायाः फलमित्युपचर्यते सर्वात्मभावः नित्यसिद्धत्वेऽपि ज्ञानं विना तदापरोक्ष्यफलाभावात् ॥

† एकोनचत्वारिंशाध्यायसमाप्तिपर्यन्तं कर्म प्रतिपादितम्; चत्वारिंशे त्वत्र कर्म च ज्ञानं च प्रतिपाद्यते ॥ ‡ बृ.भा. ४-३-५; ४-३-१४

"तद्यत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो, यश्चायं दक्षिणेऽक्षन् पुरुषः" (बृ.५ ५-२) - एतदुभयं* सत्यं ब्रह्मोपासीनो यथोक्तकर्मकृच्च यः, सोऽन्तकाले प्राप्ते सत्यात्मानं आत्मनः प्राप्तिद्वारं याचते†- हिरण्मयेन पात्रेण ॥ हिरण्मयमिव हिरण्मयं, ज्योतिर्मयमित्येतत्; तेन पात्रेणेव अपिधानभूतेन सत्यस्य आदित्यमण्डलस्थस्य ब्रह्मणः अपिहितं - आच्छादितं‡ मुखं द्वारम् । तत् त्वं हे पूषन्, अपावृणु-अपसारय सत्यधर्माय-तव सत्यस्य उपासनात्, सत्यं धर्मो यस्य सोऽहं सत्यधर्मा; तस्मै मह्यम् ; अथवा यथाभूतस्य धर्मस्य अनुष्ठात्रे । दृष्टये-तव सत्यात्मन उपलब्धये ॥

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्।**
**समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि।**
**योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥**

[पूषन्, एकर्षे, यम, सूर्य, प्राजापत्य, रश्मीन् व्यूह; तेजः समूह : यत् ते कल्याणतमं रूपं, तत् ते पश्यामि । योऽसौ असौ पुरुषः सोऽहमस्मि ॥]

* अध्यात्माधिदैवतरूपम् ।

† ज्ञानकर्मसमुच्चयफलप्राप्त्यर्थं देवयानं प्रार्थयति ॥

‡ सत्याख्यं ब्रह्म ज्योतिर्मयेन मण्डलेन अपिहितमिव, असमाहित चेतसामदृश्यत्वात् : बृ. भा. ५. १५-१.

पूषन्निति । हे पूषन्– जगतः पोषणात् पूषा रविः । तथा एक एव ऋषति* गच्छतीति एकर्षिः, हे एकर्षे; तथा सर्वस्य संयमनाद्† यमः, हे यम; तथा रश्मीनां प्राणानां रसानां च स्वीकरणात् ‡ सूर्यः. हे सूर्य; प्रजापतेरपत्यं प्राजापत्यः, हे प्राजापत्य । व्यूह–विगमय§ रश्मीन् स्वान् । समूह--एकीकुरु, उपसंहर ते तेजः-- तावकं ज्योतिः । यत् ते-- तव रूपं कल्याणतम --अत्यन्तशोभनं तत् ते-- तवात्मनः प्रसादात् पश्यामि । किं च अहं न तु त्वां भृत्यवद् याचे, योऽसौ-- आदित्यमण्डलस्थः असौ व्याहृत्यवयवः× पुरुषः--पुरुषाकारत्वात्** , पूर्णं†† वानेन प्राण बुद्ध्यात्मना जगत् समग्तमिति पुरुषः; पुरि‡‡ शयनाद्वा पुरुष । सः अहं अस्मि-- भवामि ॥

**वायुरनिलममृत-**
**मथेदं भस्मान्तꣳ शरीरम् ।**
**ॐ क्रतो स्मर कृतꣳ स्मर**
**क्रतो स्मर कृतꣳ स्मर ॥ १७ ॥**

* ऋषी–गतौ. † यम–उपरमे.

‡ सुष्ठु वीरयते इति– सूर्यः; वीर–विक्रान्तौ । § वह–प्रापणे ।

x भूरिति शिरः, भुव इति बाहू, स्वरिति प्रतिष्ठाः बृ. ५–५–३,४

** शिरःपाण्यादिलक्षणत्वात् (बृ. भा. १–४–१)

†† प्र.भा.५–५; मुं.भा. १–१–८. ‡‡ पुरि–शरीरे· बृ २–५–१८.

[वायुः अनिलं अमृतं (अथेदं) अथ इदं शरीरं भस्मान्तं (भूयात्)। ओं क्रतो स्मर, कृतं स्मर। क्रतो स्मर, कृतं स्मर ॥]

वायुरिति ॥ अथेदानीं मम मरिष्यतो वायुः - प्राणः अध्यात्मपरिच्छेदं हित्वा अधिदैवतात्मानं सर्वात्मकं अनिलं अमृतं - सूत्रात्मानं 'प्रतिपद्यताम्' इति वाक्यशेषः*। 'लिङ्गं चेदं ज्ञानकर्मसंस्कृतं उत्क्रामतु' इति द्रष्टव्यं,' मार्गयाचनसामर्थ्यात् †। अथ इदं शरीरं अग्नौ हुतं भस्मान्तं भूयात्। 'ॐ' इति यथोपासनं ओंप्रतीकात्मकत्वात् 'सत्यात्मकं अग्न्याख्यं ब्रह्म अभेदेनोच्यते ‡। हे क्रतो - सङ्कल्पात्मक§, स्मर यन्मम स्मर्तव्यम्। तस्य कालोऽयं प्रत्युपस्थितः, अतः स्मर एतावन्तं कालं भावितम्। कृतं अग्ने स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मर। "क्रतो स्मर कृतं स्मर" इति पुनर्वचनं आदरार्थम् ॥

पुनरन्येन मन्त्रेण मार्गं याचते --

**अग्ने नय सुपथा राये अस्मान्**
**विश्वानि देव वयुनानि विद्वान्।**

* अध्याहारः कर्तव्यः ॥ † न हि कर्मोपासनासमुच्चयकारिणां अनिर्वाह्य इव ब्रह्मप्राप्ति संभवति; अत एवात्र मार्गयाचनं श्रूयते इति भावः ॥

‡ प्रणव एव सत्यात्मकं ब्रह्म- इत्यत्रापि सत ब्रह्मत्वेनोपास्य ओंकारः; अत ओंप्रतीकं ब्रह्म ॥

§ मनसि अवस्थितत्वात् अग्निदेवतायाः क्रतो इति संबोधनम्: बृ. आ. ५-१५-१

समुना । सुष्ठुमार्गेणानन

युयोध्यस्मज्जुहुराणमेनो

भूयिष्ठां ते नमउक्तिं विधेम ॥ १८॥

[अग्ने, देव, विश्वानि वयुनानि विद्वान्, सुपथा राये अस्मान् नय ; जुहुराणं एनः अस्मद् युयोधि ; ते भूयिष्ठां नमउक्तिं विधेम ॥ ]

अग्ने नयेति ॥ हे अग्ने, नय-- गमय सुपथा शोभनेन मार्गेण । सुपथा इति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम् । निर्विण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेन ; अतो याचे त्वां पुनःपुनर्गमनागमनवर्जितेन शोभनेन पथा नय । राये-- धनाय, कर्मफलभोगायेत्यर्थः । अस्मान् यथोक्तधर्मफलविशिष्टान् विश्वानि-- सर्वाणि हे देव, वयुनानि-- कर्माणि प्रज्ञानानि वा, विद्वान्--जानन् । किं च युयोधि--वियोजय विनाशय, अस्मत्- अस्मत्तः जुहुराणं-कुटिलं वञ्चनात्मकं, एनः--पापम् । ततो वयं विशुद्धाः सन्तः इष्टं प्राप्स्याम इत्यभिप्रायः । किं तु वयमिदानीं ते न शक्नुमः परिचर्यां कर्तुं; भूयिष्ठां -- बहुतरां ते तुभ्यं नमउक्तिं-- नमस्कारवचनं विधेम-- नमस्कारेण परिचरेम इत्यर्थः ॥

---

* गी. ९–२१ : पुनरावृत्तिरहितेन शुक्लेनैव उत्तरेण पथा नयेत्यर्थः ॥

। छान्दसं रूपं 'युयोधि' इति ; यु मिश्रणामिश्रणयोरिति धातोः ।

## ( अथ भाष्यकृतां समुच्चये विचारः )

" अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते " (११), "विनाशेन मृत्युं तीर्त्वा संभूत्यामृतमश्नुते" इति श्रुत्वा केचित् संशयं कुर्वन्ति । अतस्तन्निराकरणार्थं* संक्षेपतो विचारणां करिष्यामः॥

तत्र तावत् किंनिमित्तः संशय इति ? उच्यते । विद्याशब्देन मुख्या परमात्मविद्यैव कस्मान्न गृह्यते, अमृतत्वं च ? † ननु उक्तायाः परमात्मविद्यायाः कर्मणश्च विरोधात् समुच्चयानुपपत्तिः । सत्यम् । विरोधस्तु नावगम्यते, विरोधाविरोधयोः शास्त्रप्रमाणकत्वात् । यथा अविद्यानुष्ठानं‡ विद्योपासनं च शास्त्रप्रमाणकं, तथा तद्विरोधाविरोधावपि । यथा च " न हिंस्यात् सर्वा भूतानि " ( ! ) इति शास्त्रादवगतं पुनः शास्त्रेणैव बाध्यते "अध्वरे पशुं हिंस्यात् "§ ( ! ) इति, एवं विद्याविद्ययोरपि स्यात्। विद्याकर्मणोश्च समुच्चयः ॥

* 'तन्निराकरणार्थं' (त.) † मुख्यमेव कैवल्यलक्षणं कस्मान्न गृह्यते ?

‡ कर्मानुष्ठानं शास्त्रविहितं, विद्या च शास्त्रविहिता ।

§ अध्वरे पशुं हिंस्यादिति विशेषवचनेनैव 'न हिंस्यात्' इति सामान्यवचनं यथा बाध्यते एवं विद्याविद्याविरोधः समुच्चयो वा यथावचनमेव ग्राह्यः; अस्ति चात्र समुच्चयो विहितः, अतस्तयोरन्या विरोधाशङ्का इति पूर्वपक्ष्यभिप्रायः ॥

## ईशावास्योपनिषत्सारः

(मन्त्राः १-३.) अस्यां जगत्यां यदिदं स्थावरजङ्गमात्मकं दर्गदृश्यते तत्सर्वं आत्मैव। आत्मयाथात्म्यविद' सर्वैषणापरित्यागेन आत्मज्ञाननिष्ठायामेवाधिकारः । आत्मग्रहणाशक्तस्य तु शास्त्रीय-विधिनिषेधलक्षणकर्मानुष्ठानेन तन्निष्ठायामधिकारः । वस्तुतस्तु ये केचनात्मतत्त्वज्ञानहीनाः, ते सर्वेऽपि असुरस्थानीयाः । यतस्ते अज्ञानावृता आत्महत्यादोषेण सततं रागद्वेषयुताः संसरन्ति ॥

(४-८.) तदेतदात्मतत्त्वं स्वेन निरुपाधिकेन रूपेण एकं देहेन्द्रियमनोभिरसम्बद्धं च सत्, अनेकमिव, उपाधिकृताः संसार विक्रिया अनुभवतीव च, मूढानां प्रत्यवभासते । यस्तु ज्ञानी सर्व-भूतेषु स्वमेवैकमात्मानं अशरीरं धर्माधर्माद्यगोचरं परमार्थसत्यं पश्यति तद्व्यतिरिक्तं न किंचिदपि सत्यमिति च, स शोकमोहा-दिभिः सकलैरविद्याकृतैः संसारधर्मैर्विमुक्तो भवति ॥

(९-१४.) कर्मोपासनयोः समुच्चित्यानुष्ठानेन तयोः पृथगनुष्ठानफलापेक्षया प्रशस्यतरं फलं भवति । तत्र समुच्चयो-पासकः कर्मणा स्वाभाविककर्मज्ञानरूपं मृत्युं अतिक्रम्य, देवतो-पासनेन देवतात्मभावलक्षणं अमृतत्वं च गच्छति । एवमेव व्याकृताव्याकृतोपासनयोः समुच्चयानुष्ठाता तयोरेकैकानुष्ठातु-

रपेक्षया उत्कृष्टतरं फलमश्नुते । तत्र व्याकृतोपासनया अनैश्वर्यादिरूपमृत्युतरणं, अव्यकृतोपासनया च प्रकृतिलयलक्षणं अमृतत्वं फलं-- इत्येवंक्रमेण पुरुषार्थसंबन्धः । एतावती संसारगतिः ॥

(१५--१८.) यो यथोक्तकर्मकृदुपासकश्च स स्वानुष्ठानबलेन मरणकाले आदित्यमण्डलस्थापरब्रह्मानुज्ञां लब्ध्वा देवयानेन पथा गत्वा समुच्चयानुष्ठानफलं अमृतत्वं च लभते । तदेवं शोकमोहाद्यखिलसंसारानर्थस्यात्यन्तं निवर्तको निवृत्तिधर्मः, चिरकालस्थाय्यमृतत्वदायकः प्रवृत्तिधर्मश्च- इति द्विप्रकारकोऽयं वेदोक्तो धर्मः ॥

---

## अथोपनिषत्*

( माध्यन्दिनपाठः )

ईशावास्यमिदꣳ सर्वं
  यत्किं च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा
  मा गृधः कस्य स्विद्धनम् ॥ १ ॥

कुर्वन्नेवेह कर्माणि
  जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति
  न कर्म लिप्यते नरे ॥ २ ॥

* असुर्या नाम ते लोका
  अन्धेन तमसावृताः ।

* आचार्यैः काण्वपाठानुसारेणैवेयं उपनिषद व्य.ख्याना । क्वचित्तु माण्डूक्यकारिकादौ माध्यन्दिनपाठानुसारेणापि विवरणं कृतम् । ऊ.नो शाखाद्वयादनपाठयोर्भेदज्ञानार्थं अत्र माध्यन्दिनपाठोऽपि प्रदर्श्यते । अत्र पाठे * एवं चिह्नितेषु मन्त्रेषु अक्षरविन्यासभेद आनुपूर्वीभेदो वा दृश्यते । काण्वपाठस्थः 'पूषन्नेकर्षे' इति मन्त्रस्तु नास्त्येव ॥

ताꣳस्ते प्रेत्याभिगच्छन्ति
ये के चात्महनो जनाः ॥ ३ ॥

अनेजदेकं मनसो जवीयो
नैनद्देवा आप्नुवन् पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्
तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

तदेजति तन्नैजति
तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य
तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

* यस्तु सर्वाणि भूतानि
आत्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं
ततो न विचिकित्सति* ॥ ६ ॥

* न विचिकित्सति–परिहृतसंशयो भवति ।

यस्मिन् सर्वाणि भूतानि
आत्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक
एकत्वमनुपश्यतः ॥ ७ ॥

स पर्यगाच्छुक्रमकायमव्रण-
मस्नाविरꣳ शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयंभू-
र्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः
समाभ्यः ॥ ८ ॥

* अन्धं तमः प्रविशन्ति
येऽसंभूतिमुपासते ।
ततो भूय इव ते
तमो य उ संभूत्याꣳ रताः ॥ ९ ॥

* अन्यदेवाहुः संभवात्
अन्यदाहुरसंभवात् ।

इति शुश्रुम धीराणां
ये नस्तद्विचचक्षिरे ॥ १० ॥

* संभूतिं च विनाशं च
यस्तद्वेदोभयꣳ सह ।
विनाशेन मृत्युं तीर्त्वा
संभूत्यामृतमश्नुते ॥ ११ ॥

* अन्धं तमः प्रविशन्ति
येऽविद्यामुपासते ।
ततो भूय इव ते
य उ विद्यायाꣳ रताः ॥ १२ ॥

* अन्यदेवाहुर्विद्याया
अन्यदाहुरविद्यायाः ।
इति शुश्रुम धीराणां
ये नस्तद्विचचक्षिरे ॥ १३ ॥

* विद्यां चाविद्यां च
यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्युं तीर्त्वा
विद्ययामृतमश्नुते ॥ १४ ॥

* वायुरनिलममृत-
मथेदं भस्मान्तꣳ शरीरं ।
ओ३म् क्रतो स्मर क्लिबे[†] स्मर
कृतꣳ स्मर ॥ १५ ॥

अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्माज्जुहुराणमेनो
भूयिष्ठां ते नम उक्तिं विधेम ॥१६॥

* हिरण्मयेन पात्रेण
सत्यस्यापिहितं मुखम्

† क्लिबे– कृशाय लोकाय ।

योऽसावादित्ये* पुरुषः
सोऽसावहम् । ओं† खं ब्रह्म ॥१७॥

---

* आदित्ये यः शास्त्रप्रसिद्धः पुरुषः स एवाहमस्मि ॥

† ओमिति नामनिर्देशः, खमिति रूपनिर्देशः; खं - आकाशवत् सर्वगतं नित्यं परिपूर्णं ब्रह्म इति ध्यायेत् ॥

# परिशिष्टम्

—*—

## एकादशमन्त्रविषये भाष्यान्तरेषु दत्तं भगवत्पादीयं विवरणम्

### अद्वैतप्रकरणे ( २५तमकारिकाभाष्ये )

"सत्यमेव देवतादर्शनस्य संभूतिविषयस्य विनाशशब्द-वाच्यस्य च कर्मणः समुच्चयविधानार्थः संभूत्यपवादः । तथापि विनाशाख्यस्य कर्मणः स्वाभाविकाज्ञानप्रवृत्तिरूपस्य मृत्योरति-तरणार्थत्ववद् देवतादर्शनकर्मसमुच्चयस्य पुरुषसंस्कारार्थस्य कर्म-फलरागप्रवृत्तिरूपस्य साध्यसाधनैषणाद्वयलक्षणस्य मृत्योरतितरणा-र्थत्वम् । एवं ह्येषणाद्वयरूपाद् मृत्योरशुद्धेर्वियुक्तः पुरुषः संस्कृतः स्यात् । अतो मृत्योरतितरणार्था देवतादर्शनकर्मसमुच्चयलक्षणा ह्यविद्या । एवमेव एषणालक्षणादविद्यया मृत्योरतितीर्णस्य वि-रक्तस्य उपनिषच्छास्त्रार्थालोचनपरस्य नान्तरीयकी परमात्मैकत्व-विद्योत्पत्तिरिति पूर्वभाविनीमविद्यामपेक्ष्य पश्चाद्भाविनी ब्रह्मविद्या अमृतत्वसाधनं एकेन पुरुषेण संबध्यमाना अविद्यया समुच्चीयत इत्युच्यते । अतोऽन्यार्थत्वाद् अमृतत्वसाधनं ब्रह्मविद्यामपेक्ष्य

तिन्दार्थ एव भवति संभूत्यपवादो यद्यप्यशुद्धिवियोगहेतुः, अतन्निष्ठत्वात् ॥"

**ऐतरेयभाष्ये** (आत्मा वा इत्यस्य संबन्धग्रन्थे)

यत्तु "विद्यां चाविद्यां च यस्तद्वेदोभयꣳसह" इति, न तत्र विद्यावतो विद्यया सह अविद्यापि वर्तत इत्ययमर्थः। कस्तर्हि, एकस्मिन् पुरुषे एकदैव न सह संबध्येयातामित्यर्थः। यथा शुक्तिकायां रजतशुक्तिकाज्ञाने एकस्य पुरुषस्य। "दूरमेते विपरीते विषूची, अविद्या या च विद्येति ज्ञाता" इति हि काठके। तस्मान्न विद्यायां सत्यां अविद्यायाः संभवोऽस्ति। "तपसा ब्रह्म विजिज्ञासस्व" इत्यादिश्रुतेः। तप आदिविद्योत्पत्तिसाधनं गुरूपसदनादि च कर्म अविद्यात्मकत्वाद् अविद्योच्यते। तेन विद्यां उत्पाद्य मृत्युं कामं अतितरति। ततो निष्कामस्त्यक्तैषणो ब्रह्मविद्यया अमृतत्वमश्नुत इत्येतमर्थं दर्शयन्नाह— "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति ॥

**तैत्तिरीयभाष्ये** (१-११ अनुवाकव्याख्याने)

"केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्माण्युपन्यस्तानि। उदितायां च विद्यायां "अभयं प्रतिष्ठां विन्दते", "न बिभेति कुतश्चन", "किमहं साधु नाकरवम्"— इत्येवमादिना कर्मनैष्किञ्चन्यं

दर्शयिष्यतीत्यतोऽवगम्यते पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्माणीति। मन्त्रवर्णाच्च– "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति ॥

[ उपरि दत्तेषु भाष्यभागेषु प्रथमे देवतोपासनाकर्मसमुच्चयोऽविद्याशब्दवाच्यः, द्वितीये तपआदिविद्योत्पत्तिसाधनं अविद्या, तृतीये तु चित्तशुद्ध्यर्थं कर्म अविद्येत्युक्तम्। सर्वथापि तु अविद्या साधनं, विद्या च पश्चादुद्भविष्यमाणेति निर्विवादम्। विद्यां चाविद्यां चेति समुच्चयार्थश्च– एकस्मिन्नेव पुरुषे क्रमेण संबन्धः, एकस्मिन्नेव पुरुषार्थे मोक्षरूपे अविद्यायाः परम्परितकारणत्वं, विद्यायाः साक्षात्साधनत्वं चेति स्पष्टमेव। सर्वेष्वेव भाष्यभागेषूपरिष्टान्निर्दिष्टेषु माध्यन्दिनपाठ एव अनुकूलतरः, 'योऽसावादित्ये पुरुषः सोऽसावहं ॐ खं ब्रह्म' इत्यैकात्म्योपसंहारात्, संभूत्युपासनामन्त्रस्य प्रथमतरं पठितत्वाच्चेति स्पष्टम् ॥

काण्वशाखायां तु अन्त्ये मार्गयाचनादिभ्यो लिङ्गेभ्यः विद्याशब्दः केवलोपासनापरो व्याख्यातो भाष्यकारैः। उपनिषद्भाष्ये एव केवलं काण्वपाठमनुसृत्य अन्यत्र माध्यन्दिनपाठानुसारेण एतन्मन्त्रविवरणे हेतुर्न ज्ञायते। अत्र सुधिय एव प्रमाणम् ॥ ]



# अथ मन्त्राणां वर्णानुक्रमणिका



---

# भाष्यस्थमुख्यशब्दसूची

---

*** अत्र परामृष्टाः पृष्ठसंख्याः

# भाष्योद्धृतानां प्रमाणवाक्यानां मूलग्रन्थानुक्रमः

[अत्र कंसे दत्ता अङ्काः तत्तद्ग्रन्थमन्त्रादिसूचकाः,
अतथादार्शितास्तु एतद्ग्रन्थपृष्ठसंख्यासूचकाः]





अध्यात्मप्रकाशमुद्रणालयः, चामराजपेटा. बेंगळूरु सिटी.

# मूलाविद्यानिरासः अथवा श्रीशङ्करहृदयम्

रचयिता — य. सुब्रह्मण्यशर्मा

सुगृहीतनाम्नां श्रीशङ्करभगवत्पादानां तदव्यवहितानुयायिनां श्रीसुरेश्वराचार्याणां च कालादर्वाग्यद्यावत् अयमेक एव गीर्वाणवाण्यां वेदान्तदर्शनमधिकृत्य विनिर्मितः **स्वतन्त्रो ग्रन्थः** । **साभिमानाभ्युपगमानां विध्वंसकः, परमार्थप्रक्रियायाः प्रदर्शकः,** प्रबलतरयुक्तीनामाहरणेन **प्रतिवादिनां मूकीभावसम्पादकश्चायं** प्रबन्धः पूज्यपादानां **श्रीशङ्कराचार्याणां** तत्त्वविज्ञानप्रक्रियारहस्यभेदकानां **गभीराशयं विवृणोति** । सर्वत्र च **प्रमाणवाक्यान्युदाहृतानि परःशतं** श्रीमद्भाष्यकृतां, तथा तत्साक्षादन्तेवासिनां श्रीसुरेश्वराचार्याणां, सुप्रसिद्धमाण्डूक्यकारिकाकृतां श्रीमद्गौडपादाचार्याणां च । अनुशाङ्करवेदान्तिभिः संप्रदायविरोधेन नूत्नतया कल्पितस्य औपनिषदप्रक्रियामलिनीकरणमूलस्य सर्वानर्थकरस्य **मूलाविद्यावादस्य समूलोत्पाटनरूपोऽयं** निबन्धः, सम्यग्दर्शनग्राहि**शुष्कतर्कपिशाचिकोच्चाटने महामन्त्ररूपो** विजयते । वेदान्तदर्शनजयस्तम्भभूतस्यास्य ग्रन्थस्य वाचकमहाशयाः स्पष्टं विजानीयुर्यज्जातिसम्पदादिकृतो विशेषो नैवापेक्ष्यतेऽधिकारिणि परमार्थसत्यान्वेषणे ब्रह्मात्मैकत्वसाक्षात्करणे वेति ॥

डे. अ. ३६+२३७ पृष्ठात्मकस्यास्य

| | **मूल्यम्** | भारते | विदेशे |
|---|---|---|---|
| सावारणपत्रात्मकस्य | [अर्धक्यालिकोबद्धस्य] | रू० २॥, | ५ षि. |
| चिक्कणपत्रात्मकस्य | [पूर्णक्यालिकोबद्धस्य] | रू० ४, | ८ षि. |

मार्गभृतिः पृथक्


**अध्यात्मप्रकाश प्रेस् बुक् डिपो**

चतुर्थवीथी. चामराजपेटा. बेङ्गळूरु सिटी.

# MŪLĀVIDYĀNIRĀSA OR SRI SANKARA HRIDAYA

---

1. "I find it the best elucidation of Sankara whose follower I am since the last thirty years or more."
   —Dr. Ramanarayan, Author of *Dream Problem*, Editor, *Practical Medicine*, Dehra Dun.

2. "I went through the manuscript. Your style is good."
   —Arthasastravisarada (now Mahamahopadhyaya) Dr. R. Shama Sastry, Ph.D., Mysore.

3. "No other contribution made to spiritual knowledge since the time of Suresvara can compare with it, in depth of achievement."
   —K. A. Krishnaswamy Iyer. B.A., Author of *Vedanta or The Science of Reality*.

4. "Your excellent book on Vedanta."
   —Dr. Sir S. Radhakrishnan, M.A.

5. "The learned author....has brought to bear on his literary labours great acuteness and independence of judgment."
   —V. Subrahmanya Iyer, B.A., Retired Registrar of Mysore University.

6. "A powerful vindication of Sankara's Monism."
   —Prof. R. Nagaraja Sarma, M.A., Mangalore.

7. "The style is admirable and quite simple."
   —Prof. M. Hirianna, M.A., L.T., (Retired).

8. "....has been written throughout in good Sanscrit and carries on quite a good number of discussions in that language with the ease of a real scholar."
   —Prof. Kokileswara Sastry, M.A., Vidya Ratna, Calcutta University.

9. "The present work points out those radical errors that have crept into later Vedanta and reasserts the impregnable position of Sankara."
   —*United India and Indian States.*

10. "The author with good courage reasserts the position of Sankara and of the eternal Vedantic Truth."
    —*Indian Literary Review.*

302-32 THE BANGALORE PRESS